## अष्टमः पाठः

# भू-विभागाः

प्रस्तुत पाठ मुगलसम्राट् शाहजहाँ के विद्वान पुत्र दाराशिकोह द्वारा विरचित ग्रन्थ 'समुद्रसङ्गमः' से संकलित किया गया है। दाराशिकोह संस्कृत तथा अरबी भाषा के तत्कालीन विद्वानों में अग्रगण्य थे। 'समुद्रसङ्गमः' ग्रन्थ में 'पृथिवी निरूपण' के अन्तर्गत उन्होंने पर्वतों, द्वीपों, समुद्रों आदि का विशिष्ट शैली में वर्णन किया है। उसी वर्णन के अंश यहाँ "भू-विभागाः" शीर्षक के अन्तर्गत प्रस्तुत किये गये हैं।

दाराशिकोह मुगलसम्राट् शाहजहाँ के सबसे बड़े पुत्र थे। उनका जीवनकाल 1615 ई० से 1659 ई० तक है। शाहजहाँ उनको राजपद देना चाहते थे पर उत्तराधिकार के संघर्ष में उनके भाई औरंगजेब ने निर्ममता से उनकी हत्या कर दी। दाराशिकोह ने अपने समय के श्रेष्ठ संस्कृत पण्डितों, ज्ञानियों और सूफी सन्तों की सत्संगति में वेदान्त और इस्लाम के दर्शन का गहन अध्ययन किया और उन्होंने फारसी और संस्कृत में इन दोनों दर्शनों की समान विचारधारा को लेकर विपुल साहित्य लिखा। फारसी में उनके ग्रन्थ हैं-सारीनतुल् औलिया, सकीनतुल् औलिया, हसनातुल् आरफीन (सूफी सन्तों की जीवनियाँ), तरीकतुल् हकीकत, रिसाल - ए-हकनुमा, आलमे नासूत, आलमे मलकूत (सूफी दर्शन के प्रतिपादक ग्रन्थ), सिर्र-ए-अकबर (उपनिषदों का अनुवाद) उनके फारसी ग्रन्थ हैं। श्रीमद्भगवद्गीता और योगवासिष्ठ के भी फारसी भाषा में उन्होंने अनुवाद किये। 'मज्म-उल्-बहरैन्' फारसी में उनकी अमर कृति है, जिसमें उन्होंने इस्लाम और वेदान्त की अवधारणाओं में मूलभूत समानताएँ बतलायी हैं। इसी ग्रन्थ को दाराशिकोह ने 'समुद्रसङ्गमः' नाम से संस्कृत में लिखा।

**अथ पृथिवीनिरूपणम्-पृथिव्याः सप्तभेदाः। ते च भेदाः सप्तपुटान्युच्यन्ते। तानि च पुटानि-अतल-वितल-सुतल-तलातल-रसातल-पातालाख्यानि। अस्मन्मतेऽपि सप्तभेदाः। यथाऽस्मद्वेदे श्रूयते परमेश्वरो यथा सप्तगगनानि तद्वत् पृथिव्याः सप्तविभागान् कृतवान्।**

**अथ पृथिव्याः विभागनिरूपणं यत्र लोकास्तिष्ठन्ति। तस्याः दार्शनिकैः सप्तधा विभागः कृतस्तान् विभागान् सप्त अअक्लिम इति वदन्ति। पौराणिकास्तु सप्त द्वीपानि**

वदन्ति। एतान् खण्डान् पलाण्डुत्वग्वदुपर्यधो भावेन न ज्ञायन्ते, 'किन्तु' निःश्रेणी सोपानवज्जानन्ति। सप्त पर्वतान् सप्त कुलाचलान् वदन्ति, तेषां पर्वतानां नामान्येतानि प्रथमः सुमेरुर्मध्ये, द्वितीयो हिमवान्, तृतीयो हेमकूटः, चतुर्थो निषधः एते सुमेरोरुत्तरतः। माल्यवान् पूर्वस्यां, गन्धमादनः पश्चिमायां कैलासश्च मर्यादापर्वतेभ्योऽतिरिक्तः। यथाऽस्मद्वेदे श्रूयते- "अस्माभिः पर्वताः शंकवः कृताः। एतेषां सप्तद्वीपानां प्रत्येकमावेष्टनरूपाः सप्तसमुद्राः। लवणो जम्बुद्वीपस्यावरकः। इक्षुरसः प्लक्षद्वीपस्य दधिसमुद्रः क्रौञ्चद्वीपस्य, क्षीरसमुद्रः शाकद्वीपस्य, स्वादुजलसमुद्रः पुष्करद्वीपस्यावरकः इति। समुद्राः सप्त अस्मद्वेदेऽपि प्रकटाः भवन्ति। वृक्षाः लेखनी भवेयुः समुद्रोऽपि मसी भवेत्, परं भगवद्वाक्यानि समाप्तानि न भवन्ति। प्रतिद्वीपं प्रतिपर्वतं प्रतिसमुद्रं नानाजातयोऽनन्ता जन्तवस्तिष्ठन्ति। या पृथिवी ये पर्वताः ये समुद्रा सर्वाभ्यः पृथिवीभ्यः सर्वेभ्यः पर्वतेभ्यः सर्वेभ्यः समुद्रेभ्यः उपरि तिष्ठन्ति तान् 'स्वर्ग' इति वदन्ति। या पृथिवी ये पर्वताः ये समुद्राः सर्वाभ्यः पृथिवीभ्यः सर्वेभ्यः पर्वतेभ्यः सर्वेभ्यः समुद्रेभ्योऽधो भागे तिष्ठन्ति स 'नरक' इति वदन्ति। निश्चितं किल सिद्धैः स्वर्गनरकादिकं सर्वं ब्रह्माण्डान्न किञ्चिद्बहिरस्तीति। ते सप्तगगनाश्रिताः सप्त ग्रहाः स्वर्गं परितो मेखलावत् परिभ्रमन्तीति वदन्ति; न स्वर्गस्योपरि। अथ स्वर्गस्य यदि मन आकाशं जानन्ति अस्मदीयास्तमर्श इति वदन्ति। स्वर्गभूमिं कुर्शीति वदन्ति।"

## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **पुटानि** | – | भेदाः, भेद या पुट |
| **अअक्लिम** | – | अकूलीन (खण्ड अथवा टुकड़ा) |
| **पलाण्डुत्वक्** | – | प्याज का छिलका |
| **कुलाचलाः** | – | कुलपर्वत अथवा सात पर्वतों की माला |
| **निःश्रेणी** | – | निसेनी अथवा सीढ़ी |
| **सोपान** | – | निसेनी में एक समान दूरी पर लगने वाले छोटे-2 काष्ठ-खण्ड |
| **शङ्कवः** | – | कीलें |

| | | |
|---|---|---|
| **आवेष्टनरूपा** | – | आवरण करने वाले |
| **इक्षुरसः** | – | गन्ने का रस, सुरा अथव मदिरा |
| **आवरकः** | – | ढकने वाला |
| **मसी** | – | स्याही |
| **मेखलावत्** | – | मेखला अथवा शृङ्खला के समान |
| **'अर्श'** | – | आकाश अथवा गगन, स्वर्ग के ऊपर की छत (फारसी शब्द) |
| **'कुर्शी'** | – | परमेश्वर का सिंहासन अथवा स्वर्गभूमि, 'कुर्शी' को आठवाँ आसमान भी कहा गया है। (फारसी शब्द) |

## अभ्यासः

1. **संस्कृतेन उत्तरं दीयताम्-**

(क) पृथिव्याः कति भेदाः?

(ख) पृथिव्याः सप्तपुटानां नामानि कानि सन्ति?

(ग) पर्वताः कति सन्ति?

(घ) समुद्राः कति सन्ति?

(ङ) दधिसमुद्रः कस्य द्वीपस्यावरकः?

(च) 'अर्श' इति पदं कस्मै प्रयुक्तम्?

(छ) 'कुर्शी' इति पदं कस्मिन्नर्थे प्रयुक्तम्?

(ज) 'अस्मद्वेद' इति शब्दः दाराशिकोहेन कस्य ग्रन्थस्य कृते प्रयुक्तः?

2. **हिन्दीभाषया आशयं लिखत-**

एतान् खण्डान् पलाण्डुत्वग्वदुपर्यधोभावेन न ज्ञायन्ते, किन्तु निःश्रेणी-सोपानवज्जानन्ति। सप्तपर्वतान् सप्तकुलाचलान् वदन्ति, तेषां पर्वतानां नामान्येतानि-प्रथमः सुमेरुर्मध्ये, द्वितीयो हिमवान्, तृतीयो हेमकूटः, चतुर्थो निषधः एते सुमेरोरुत्तरतः।

3. **अधोलिखितानां पदानां स्वसंस्कृतवाक्येषु प्रयोगं कुरुत-**

पुटानि, कृतवान्, आवेष्टनरूपा, सर्वेभ्यः, ब्रह्माण्डात्, परिभ्रमन्ति।

**4. अधोलिखितानां पदानां सन्धिविच्छेदं कुरुत-**

पुटान्युच्यन्ते, अस्मन्मते, पलाण्डुत्वग्वदुपर्यधोभावेन, सोपानवज्जानन्ति, सुमेरोरुत्तरतः, समुद्रोऽपि, किञ्चिद्बहिरस्तीति, अस्मदीयास्तमर्श

**5. अधोलिखितानां पदानां पर्यायवाचिपदानि लिखत-**

पृथिवी, पर्वतः, समुद्रः, गगनम्, स्वर्गः

**6. रिक्तस्थानानाम् पूर्तिः विधेया-**

(क) पौराणिकास्तु ................ द्वीपानि वदन्ति

(ख) सप्त ................ सप्तकुलाचलान् वदन्ति

(ग) ................ जम्बुद्वीपस्यावरकः

(घ) स्वर्गभूमिं ................ वदन्ति

## योग्यताविस्तारः

**(क) संस्कृतवाङ्मये भूगोल-खगोलविषयकं ज्ञानं प्राचुर्येण उपलभ्यते।**

**यथा-सूर्यसिद्धान्तादिशास्त्रेषु-**

**भगवन्! किम्प्रमाणा भूः किमाकारा किमाश्रया।**
**किंविभागा कथं चात्र सप्तपातालभूमयः॥**

**अहोरात्रव्यवस्थां च विदधाति कथं रविः।**
**कथं पर्येति वसुधां भुवनानि विभावयन्॥**

**कथं पर्येति वसुधां भुवनानि विभावयन्।**
**भूमेरुपर्युपर्यूर्ध्वाः किमुत्सेधाः किमन्तराः॥**

**(ख) 'कुलाचलाः' सप्तपर्वतानां माला अस्ति। संस्कृतवाङ्मये एते सप्त पर्वताः**

**महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः।**
**विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥**

**(ग) अस्मिन् पाठे वर्णितानां भौगोलिकतथ्यानां तुलना आधुनिकभूगोल-विज्ञानेन प्रमाणिततथ्यैः सह करणीया।**

**(घ) सप्तधा इति पदं अनुसृत्य अधोलिखितैः संख्यावाचिभिः शब्दैः पदानि निर्मातव्यानि एकम्, द्वि, त्रि, चतुर्, पञ्च, ........**